त्वं मया (ढ) स्वांशत: विक्रमादित्य: सृष्ट: म्लेच्छरूपावतीर्णानामसुराणां शान्तये, उद्दामदुर्वृत्तानां दमनाय च। अत: (ण)सद्वीपपातालां महीं वशे स्थापयित्वा विद्याधराणामधिराजो भविष्यसि ; तत्र च चिरं दिव्यान् भोगान् भुक्त्वा, स्वेच्छया च तान् त्यक्त्वा अन्ते ममैव सायुज्यमवाप्स्यसि। एतच्च अपराजितं नाम खड्गं (त) मत्तो गृहाण, अस्यैव प्रसादात् यत् यदुक्तं, तत् सर्वं ते सेत्स्यति" इत्युक्त्वा तं खड्गरत्नं तस्मै दत्त्वा, वाक्-पुष्पैश्च तेनार्चित: शम्भु: देवै: सह तिरोदधे।

अथ कथोपसंहार:।—

अथ सर्वं कार्य्यं समाप्तं निशाञ्च प्रभातां दृष्ट्वा राजा स्वपुरं

---

यन्तेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्" इत्यमर:), तापस:,—तपस्वी कूटतापस:,—कपटयोगी (१या तत्पु०)।

(ढ) स्वांशत:,—निजांशात, स्वदेहं विभज्येत्यर्थ:। उद्दामा:,—उच्छृङ्खला:, अत्युग्रा इत्यर्थ:, ते च ते दुर्वृत्ता:,—दुराचारा: तेषाम् उद्दामदुर्वृत्तानाम्—उच्चण्ड-दु:शीलानां, दुष्टानामित्यर्थ:।

(ण) द्वीपै:,—जम्बुशाककुशक्रौञ्चशाल्मलीप्लक्षपुष्कराख्यै: सप्तभि: द्वीपै:, पातालै:,—"अतलं वितलञ्चैव नितलञ्च गभस्तिमत्। महातलञ्च सुतलं पातालं सप्त कीर्त्तितम्" इत्युक्तै: सप्तभि: पातालैश्च, सह विद्यते इति तादृशीं सद्वीपपातालां—सप्तद्वीपसप्तपातालसहितां (विश०। बहुव्री०)। अधि—अधिक:, राजा अधिराज:,—राजश्रेष्ठ:, चक्रवर्त्तीति यावत् (प्रादिस०)। सह युनक्ति—युक्तो भवति इति सयुङ्, तस्य भाव: सायुज्यं—सारूप्यसालोक्यादिपञ्चविधमुक्तिमध्ये एकत्वरूपं मुक्तिभेदमित्यर्थ: [सह+युज्+ क्विप् "सहस्य स: संज्ञायाम्" (६।३।७८ पा०) इति सहस्य स:, तत: ष्यञ्]।

(त) मत्त:,—मत्सकाशात (अस्मत्-शब्दात् पञ्चम्यास्तसिल्)। सेत्स्यति—सम्पत्स्यते, सफलीभविष्यतीत्यर्थ: (सिध+लृट्-स्यति)। खड्गेषु रत्नं—श्रेष्ठं खड्गरत्नं—प्रशस्तासिं (७मी तत्पु०। "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी)। वाच: पुष्पाणीव तै: वाक्पुष्पै:,—वचनकुसुमै:, स्तुतिभिरिति भाव:। तिरोदधे—अन्तर्दधे, अन्तर्हितवानित्यर्थ: (तिरस्+धा+लिट्-ए)।

प्रतिष्ठानं प्रविवेश। तत्र (थ) प्रकृतिभिर्विहितोत्सवाभिरभ्यर्चितः स्नानदानगिरिशार्चनगीतवाद्यादिभिः तत् सर्वं दिनमनयत्। ततः स्वल्पैरेव दिवसैः भगवतः शङ्करस्य प्रसादात् सद्वीपां सपातालां सर्वां महीं (द) निष्कण्टकां वशीकृत्य बुभुजे। अथ महतीं विद्याधरसमृद्धिं सम्प्राप्य चिरं तत्सुखानि सम्भुज्य (ध) भगवत्सायुज्यमन्ते ययौ।

इति बि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचिता वेतालपञ्चविंशतिः।

---

(थ) प्रकृतिभिः,—अमात्यादिभिः ("प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गेऽसौ" इति मेदिनी), विहितः,—अनुष्ठितः, उत्सवः,—आनन्दजनकव्यापारः याभिः ताभिः विहितोत्सवाभिः,—प्रकान्तविविधानन्दसूचकव्यापाराभिः।

(द) निष्कण्टकां—क्षुद्रशत्रुशून्याम्।

(ध) भगवत्सायुज्यं—भगवता—ऐश्वर्य्यवता शिवेन सह, सायुज्यम्—ऐक्यरूपमुक्तिभेदम्।

इति वेतालपञ्चविंशतिकथायाः व्याख्या समाप्ता।

---



